पुनः कल्की राजा मार्गे गच्छतः साधून् दृष्ट्वा लुब्धः सन् भिक्षायाः षष्ठांशं मार्गयिष्यति, तदा सर्वे साधवः एकत्रीभूय कायोत्सर्गं करिष्यन्ति शासनदेवता चाराधयिष्यन्ति, शासनदेवता प्रकटीभूय साधुभिक्षाषष्ठांशं निवारयिष्यति, पुनर्वेषधारिणो वेषं त्याजयिष्यन्ति एतादृशो महादुरात्मा भविष्यति, पुनः कियति काले गते भिक्षाषष्ठांशस्य स्मरणं करिष्यति,यदा धनार्थमाचार्यान् सर्वसाधून् संमील्य वाटके क्षेप्स्यति रोधयिष्यति, तदा संविज्ञाचार्यप्रमुखाः ससंघाः शासनदेवताराधनार्थं कायोत्सर्गं करिष्यन्ति, संघकायोत्सर्गात् शासनदेवता आगमिष्यति, युक्तितः कल्किन उपदेशान् दास्यति तथापि न मानयिष्यति, तस्मिन् समये इन्द्रस्यासनं कम्पयिष्यति तदा स वृद्धब्राह्मणरूपं कृत्वा यत्र कल्की सिंहासनोपरि स्थितस्तत्रागमिष्यति ततः कल्किनं कथयिष्यति--अहो ! राजेन्द्र ! एते निरपराधिनः साधवः किं रुद्धाः एभिस्तवापराधः कः कृतः ? तदा कल्की तं वदिष्यति--अहो ! ब्राह्मण ! सर्वदर्शनिभिर्मम करो दत्तः परमेते भिक्षवो भिक्षाषष्ठांशमपि न ददति,ततो मया एते रुद्धाः सन्ति, तत इन्द्रो वदिष्यति- एषां पार्श्वतस्तव किमपि न मिलिष्यति एषां पार्श्वे किमपि नास्ति पुनर्भिक्षाषष्ठांशमपि तव न दास्यंति एषामयं व्यवहारो नास्ति, पुनस्त्वं भिक्षाभागं मार्गयन् लज्जां न यासि एषां साधूनां त्वं त्यागं कुरु, इतरथा तव महत्कष्टमुत्पत्स्यति, एतादृशमिन्द्रवचनं श्रुत्वाऽपि न त्यक्ष्यति ततो भाद्रपदशुक्लाष्टम्यां ज्येष्ठानक्षत्रे इन्द्रो-रोषं गतः सन् चपेटाप्रहारात् कल्किनं मारयिष्यति सर्वायुः षडशीति ८६ वर्षं प्रपाल्य नरकं यास्यति, ततोऽर्हद्धर्ममिन्द्रः शिक्षयित्वा दत्तनामानं कल्किनः पुत्रं राज्ये स्थापयिष्यति,गुरु-संघयोर्नमस्कारं करिष्यति, इन्द्रः स्वस्थाने यास्यति ततो दत्तराजा पितुः पापफलं ज्ञात्वा-पुण्ये तत्परो भविष्यति, निरंतरं जिनेश्वराणां चै-

त्यानि कारयित्वा सर्वपृथ्वीं जिनालयैः शोभायमानां करिष्यति, तदा पुनर्जिनधर्ममाहिमा प्रचुरो भविष्यति. अथाग्रे पञ्चमकाले चतुर्विधश्रावक-श्राविका-साधु-साध्वीनां संख्या कथ्यते–षोडशसहस्राधिका एकादशलक्षा(१११६०००),एतावन्तो राजानः पञ्चमकाले जिनमतभक्ता भविष्यन्ति,एककोटिमिता (१००००००० ),जिनशासनप्रभावका मन्त्रिणो भविष्यन्ति, पुनः पञ्चमकाले श्रीसुधर्मस्वामिप्रमुखाश्चतुराधिकद्विसहस्रप्रमाणा (२००४),युगप्रधानपदधारका महोपकारिण आचार्या भविष्यन्ति,तत्रापि सुधर्मजम्बूस्वामिनौ तद्भवे एव मुक्तिं यास्यतः, शेषाः सर्वे एकावतारिणो भविष्यन्ति। ततो युगप्रधानसदृशा आचार्याः प्राणिनां मोहान्धकारेमार्तण्डसदृशाः षोडशाधिकैकादशलक्षैकादशसहस्रमिता (११११०१६), एतावन्तो अन्येऽपि आचार्याश्चारित्रपालका भविष्यन्ति, पुनः पञ्चमरके तेतीसलाख च्यारहजार च्यारसें उंगणीस ( ३३४०४१९ ) एतावन्तो मध्यगुणधारका आचार्या भविष्यन्ति पुनः पञ्चमारके पंचावनकोटि पंचावनलक्ष पंचावनसहस्र पंचशतपचवीस ( ५५५५५५५२५, ) अधर्माचार्या भविष्यन्ति, पुनः पंचावन लाखकोटि पंचावनहजारकोटि चौपनसे कोटि चउमालिसकोटि, एतावन्त उपाध्याया वाचनाचार्या भविष्यन्ति, पुनः सत्तरे लाख कोटि नवहजारकोटि एकसोकोटि एकवीसकोटि एकलाख साठहजार एतावन्तः साधवो भविष्यन्ति, पुनः पञ्चमारके (दशकोटाकोटि द्वादशशतकोटि बाणवेकोटि बत्तीसलाख निनाणवे हजार एकसो एतत्प्रमाणाः साध्व्यो भविष्यन्ति, पुनः पञ्चमारके सोले कोटिलाख तीन कोटी हजार तीनसेकोडी सीत्तरकोडी चौरासीलाख एतावत्प्रमाणाः श्रावका भविष्यन्ति,पुनः पञ्चमारके पैंतीसकोडिलाख बाणु हजारकोडि पांचसेंकोडि बत्तीस कोडि एतावत्यः श्राविका भविष्यन्ति, एतावतः पञ्चमारके संघस्य

प्रमाणम्, अत्र केचिदाचार्या एवं वदन्ति-पञ्चभरते-रवतयोः संघस्य प्रमाणं नत्वेकस्य, केचिदाचार्याः पञ्चभरतस्य संघप्रमाणं वदन्ति, केचित् पुनः एकभरते संघप्रमाणं वदन्ति, तत्त्वं तु ज्ञानिगम्यम्. पुनः पञ्चमारकप्रान्ते द्विहस्तशरीरप्रमाणाः स्वर्गात् च्युत्वा गृहवासे द्वादश वर्षाणि, श्रामण्ये चत्वारि वर्षाणि, आचार्यपदे चत्वारि वर्षाणि स्थित्वा विंशतिवर्षायुः प्रपाल्य दुप्पसहसूरयः सौधर्मस्वर्गे गमिष्यंति, कथंभूता दुप्पसहसूरयः ? दशवैकालिक-जितकल्प-आवश्यकाऽनुयोगद्वार-नन्दीसूत्रधारका इन्द्रादिभिर्नताः, षष्ठोग्रतपधारकाः प्रान्ते कृताष्टमतपसः एकसागरोपमायुः स्वर्गे भुक्त्वा ततो भरतक्षेत्रे जन्मावाप्य मुक्तिं यास्यंति। वीसहजार नवसें वर्ष, त्रणमास, पांच दिन, पांच पहोर, एक घडी, दोपळ, ४१ अक्षरोच्चार एतावत्कालप्रमाणो जिनधर्मो भविष्यति,९९ वर्ष. मास ८, दिन २४, प्रहर २, घटी ५॥, पलानि ६७, १९ अक्षरोच्चार एतावन्मध्ये जिनधर्मः स्तोकः स्थास्यति आरकस्य प्रांते जिनधर्मो विच्छेदं यास्यति, श्रुत-सूरि-संघ-धर्माः पूर्वाह्णे विच्छेदं यास्यंति, नृपो विमलवाहनः सुमुखमन्त्री च मध्याह्ने विच्छेदं यास्यतः, अग्निः सन्ध्यायां विच्छेदं यास्यति, पुनः पञ्चमारकान्ते दुप्पसहाख्यः सूरिः, फल्गुश्रीः साध्वी, नायलः श्रावकः, सत्यश्रीः श्राविका, एतदात्मकश्चतुर्विधसंघो भविष्यति पञ्चमारकस्यार्वाग् धर्मोवत्स्यति इत्यनेन धर्मो नास्ति यः पुनर्वदिष्यति स संघतो बहिः कर्तव्यः, एवमेकविंशतिसहस्रप्रमाणः पञ्चमारको भविष्यति । एतत्प्रमाणो षष्ठारकोऽपि भविष्यति । अथ षष्ठारकस्य किंचित् स्वरूपं कथ्यते—धर्मतत्त्वं प्रणाशं यास्यति, जनो हाहाभूतो भविष्यति, पशुवद् मातृपित्रादि व्यवस्थावर्जितश्च भविष्यति, बहुधूलिसहिता अतिनिष्ठुरा अनिष्टा वायवो वास्यन्ति, दिशश्च धूम्रं मोक्षन्ति, चन्द्रमा अतिशीतं मोक्ष्यति, अर्यमा अत्युष्णं तप्स्यति, अतिशीतोष्णव्याप्तो लोकः क्लेशम-

वास्यति भस्म-दृषद्-ऽग्निकण-क्षार-विष-मल-विद्युन्मयाः सप्त मेघा वर्षिष्यन्ति, एकैकस्य मेघस्य सप्त सप्त दिनानि यावद् वर्षा भाविष्यति, यैः कास-श्वास-शूल-कुष्ठ-जलोदर-ज्वर-शिरोऽर्तिप्रमुखा मनुष्याणां महारोगा भविष्यन्ति, अङ्गारसदृशा भूमिर्भविष्यति, गिरि-नदी-गर्तादिका जलेन समीभविष्यन्ति,जल-स्थलचारिणः तिर्यंचो दुःखेन स्थास्यन्ति, क्षेत्र-वनाऽऽराम-लता-तरु-तृणानि क्षयं यास्यन्ति; वैताढ्य-ऋषभकूट-गंगा-सिन्धूर्विमुच्य जलेन सर्वे समा भविष्यन्ति, भरतभूमिः कदाचिद् धूलिवहुला, कदाचिद् सार्द्रकर्दमा भविष्यति;एकहस्तमानाः,कठोरांगाः,दुष्टवर्णा ,निष्ठुरवचनाः,रोगार्ताः,क्रोधिनः,घण्टावच्चिपटनासिकाः,निर्लज्जाः, वस्त्ररहिता नराः,स्त्रियश्च भविष्यन्ति,नराणां विंशतिवर्षायुः स्त्रीणां च षोडशवर्षायुर्भविष्यति, षड्वर्षा स्त्री गर्भान् धारयिष्यति दुष्प्रसवा च. स्थविरा तु षोडशाब्दा बहुसुतेन मातृका भविष्यति. रथचक्रयोर्मध्ये यत्प्रमाणा धरित्री भवति तत्प्रमाणं गंगासिन्ध्वोः पानीयं वहिष्यति, पुनर्वैताढ्यगिरौ द्वासप्ततिनद्युभयतटभूमिषु विलानि सन्ति तेषु मनुष्या निवासं करिष्यन्ति, नदीनां कूले नव नव विलानि सन्ति तत्र तिर्यञ्चो मनुष्याश्च बीजमात्रतया भविष्यन्ति मांसाहारनिरताः,निर्घृणाः,निर्विवेकाः, तस्मिन् काले मनुष्यादयः समस्ता भविष्यन्ति,बहुमत्स्य-कच्छपादिभिर्व्याप्ते गंगासिन्धू भविष्यतः,पुनर्नराद्यास्तत्रैत्य निशायां मत्स्यादीनि कृष्ट्वा स्थले मोक्ष्यन्ति,दिवा सूर्यत्विषा पक्वानि मत्स्यादीनि निशान्तरे खादिष्यन्ति,एवं निरन्तरं भोक्ष्यन्ति,यस्मात् तस्मिन् काले द्व्यादिकं नास्ति,न च पुष्पफलादिकं, न चान्नं,न च शय्यासनादिकम्,एवं भरतैरवतेषु दशस्वापि दुःपमकालो भविष्यति।अथाग्रे उत्सर्पिण्यां षष्ठारकसदृशःप्रथमारको भविष्यति उत्सर्पिण्यामेकविंशतिसहस्रवर्षप्रमाणे प्रथमारके गते द्वितीयारकोऽपि एतत्प्रमाणो भविष्यति। अथ द्वितीयारकप्रान्ते पुष्करावर्तमेघः

ममाहोरात्रं यावद् वर्षिष्यति तस्मात् पृथिवीतापो यास्यति, द्वितीयः क्षीरोदनामा मेघो वर्षिष्यति, तस्माद् धान्यनिष्पत्तेर्योग्या भविष्यति, तृतीयो घृतोदकमेघो वर्षिष्यति तस्मात् पृथिवी सचिक्कणा भविष्यति, चतुर्थः शुद्धोदकमेघो वर्षिष्यति, तस्मादौषधिनिष्पत्तिर्यास्यति, यदा पञ्चमो रसोदकमेघो वर्षिष्यति तस्मात् पृथिव्यां रसोत्पत्तिर्भविष्यति. एवं पञ्चत्रिंशतिदिनं यावद् मेघो वर्षिष्यति, तदा वृक्षौषधिलताधान्यप्रमुखाः स्वयं निष्पत्तिं यास्यन्ति. तान् दृष्ट्वा मनुष्या विलेभ्यो बहिर्निःसरिष्यन्ति, भरतपृथिवी पुष्पफलादिसुरताभून्, तदा फलादीनि भक्षिष्यन्ति, अतः परं मांसं न भक्ष्यम्. यथा यथा कालः एष्यति तथा तथा रूपसंहननायूंषि धान्यादीनि च भारते वर्धिष्यन्ति, सुरा वाताः ऋतवः सलिलाश्च भविष्यन्ति, तिर्यञ्चो मनुष्याश्च गतरोगाः क्रमेण भविष्यन्ति, द्वितीयारकमान्ते मध्यदेशे भरतारन्यां सप्त कुलकरा भविष्यन्ति--तत्र प्रथमो विमलवाहनः, द्वितीयः सुदामः, तृतीयः संगमः, चतुर्थः सुपार्श्वः, पञ्चमो दत्तः, षष्ठः सुमुखः, सप्तमः समुचिः, एते सप्त कुलकरा भविष्यन्ति. तत्र जातिस्मृतिपूर्वं विमलवाहनो राज्यहेतवे ग्रामाः, पुरादीनि च निवेशयिष्यति, राजा विमलवाहनो गोऽश्वादिसंग्रहं कारिष्यति, शिल्पानि व्यवहारं लिपिर्गणितानि च व्यञ्जयिष्यति, दुग्धदध्यादौ शम्ये ज्वलने चोत्पन्ने सति हितकामी राजा प्रजानां रन्धनाद्युपदेशं दास्यति एतत्सर्वं द्वितीयारके भविष्यति ।अथ तृतीयारकस्य नवाधिकाशीतिपक्षे गते सति द्वारपुरनगरे समुचिराज्ञो भद्रायां महादेव्यां चतुर्दशस्वप्नसूचितो नन्दनः श्रेणिकजीव आदितीर्थकृत् पद्मनाभाभिधो जन्मादिना महावीरतुल्यो भविष्यति, कथंभूतः पद्मनाभः ? सप्तहस्तशरीरोन्नतः काञ्चनवर्णकायः सिंहलाञ्छनो द्वासप्ततिवर्षायुः प्रथमतीर्थंकरो भविष्यति, अतः परं पूर्ववत् प्रातिलोम्येन पूर्वार्हत्समा अमी सर्वे क्रमाद् जिनेश्वरा भविष्यन्ति, तत्र

श्रेणिकराज्ञो जीवः पद्मनाभो जिनेश्वरः १, श्रीमहावीरस्वामिनः पितृव्यः सुपार्श्वजीवः सूरदेवो द्वितीयः जिनेश्वरः २, तृतीयो कोणिकनृपपुत्र उदायिनो जीवः सुपार्श्वः ३, पोट्टिलाऽणगारस्य जीवः चतुर्थः स्वयंप्रभः ४, दृढायुर्श्रावकस्य जीवः पंचमः सर्वानुभूतिः ५, कार्त्तिकस्य षष्ठोऽर्हन् देवश्रुताभिधः ६, सप्तमो सरवश्रावकस्य जीव उदयाह्वयः ७, अष्टमः आनंदस्य जीवः पेढाल इति नामा ८, नवम सुनंदस्य जीवः पोट्टिलाभिधः ९, दशमो शतकस्य जीवः शतकीर्तिनामा जिनेश्वरः १०, देवकीराज्ञीजीवः एकादशः सुव्रताभिधो जिनो भविष्यति ११, कृष्णवासुदेवस्य जीवः अममाख्योऽर्हन् द्वादशो भविष्यति १२, सत्यकी विद्याधरस्य जीवोऽर्हन् निष्कषायः त्रयोदशः १३, बलभद्रस्य जीवो निष्पुलाकश्चतुर्दशो भविष्यति १४, रोहिणीजीवो निर्ममः पञ्चदशः जिनः १५, सुलसाश्राविकाया जीव-श्चित्रगुप्तो जिनः षोडशो भविष्यति १६, रेवतीश्राविकाया जीवः समाधिनामा सप्तदशो जिनो भविष्यति १७, शताळीश्रावकस्य जीवः अष्टादशोऽर्हन् संवराभिधः १८, द्वीपायनजीवः एकोनविंशोऽर्हन् यशोधरः १९, कषायस्य जीवो विजयो विंशतितमः २०, एकविंशो जिनो मल्लो यः पुरा नारदोऽभवत् २१, अम्बडस्य जीवो द्वाविंशो देवतीर्थकरः २२, त्रयोविंशः श्राद्धारमस्य जीवोऽनन्तवीर्यो भविष्याति २३, स्वातिजीवश्चतुर्विंशो भद्रकृन्नामा तीर्थकरो भविष्यति २४, एते आगामिकाले चतुर्विंशतिः तीर्थकरा भविष्यन्ति, एषामायुः कल्याणकान्तर–लाञ्छन–वर्णाः पश्चानुपूर्व्या भविष्यन्ति, वर्तमानजिनवत् । अथ भाविनश्चक्रवर्तिनः कथ्यन्ते–दीर्घदन्तः १, गूढदन्तः २, शुद्धदन्तः ३, श्रीचन्द्रः ४, श्रीभूतिः ५, श्रीसोमः ६, पद्मः ७, महापद्मः ८, कुसुमः ९, विमलः १०, विमलवाहनः ११, रिष्टः इत्यपरनामा भरतो द्वादशः १२ । अथ वासुदेवानाह–नन्दीः १,

नन्दमित्रः २, सुन्दरबाहुः ३, महाबाहुः ४, अतिबलः ५, महाबलः ६, बलः ७, द्विपृष्टः ८, त्रिपृष्टः ९, इत्यात्मकाः। अथ प्रतिवासुदेवा उच्यन्ते–तिलकः १, लोहजंघः २, वज्रजंघः ३, केशरीः ४, बलिः ५, प्रह्लादः ६, अपराजितः ७, भीमः ८, सुग्रीवः ९, इत्यात्मकाः। अथ बलदेवा उच्यन्ते–जयः १, विजयः २, भद्रः ३, सुप्रभः ४, सुदर्शनः ५, नन्दः ६, नन्दनः ७, पद्मः ८, संकर्षणः ९, इत्यात्मकाः। एवमेते त्रिषष्टिशलाकाः पुरुषा भविष्यन्ति, तेषां मध्ये एकषष्टिशलाकाः पुरुषास्तृतीयारके भविष्यन्ति, एकस्तीर्थंकर, एकश्चक्रवर्ती, एवं द्वौ चतुर्थारके भविष्यतः, द्वयोश्चतुरशीतिपूर्वलक्षवर्षायुर्भविष्यति, ततः कल्पवृक्षोत्पत्तिर्भविष्यति सर्वे युगलिका भविष्यन्ति. पाश्चात्यचतुर्विंशतितमजिनस्याग्रतनप्रथमजिनस्याष्टादशकोटाकोटिसागरोपमानामन्तरं भविष्यति. उत्सर्पिणी, अवसर्पिणीकाले एकत्रीकृते एकं कालचक्रं भवति, तानि कालचक्राणि अनन्तानि गतानि, पुनरस्मिन् भरतक्षेत्रे अग्रेऽनन्तानि कालचक्राणि भविष्यन्ति, एवं श्रीवर्धमानः प्रभुर्गौतमस्य कालस्वरूपं निरूप्य समवसरणाद् निर्ययौ, हस्तिपालनरेन्द्रस्य शुल्कशालायां च जगाम। स्वामी तद्दिनयामिन्याम् आत्मनो मोक्षं विदित्वा दध्यौ-अहो! गौतमस्य मयि स्नेहोऽधिकः, य एवास्य महात्मनः केवलज्ञानान्तरायः, स छेद्य इति विज्ञाय गौतममिति जगाद–अपरस्मिन् ग्रामे देवशर्मा द्विजोऽस्ति, स त्वया प्रतिबोधं प्राप्स्यति, तस्मात् तत्र हे गौतम! त्वं गच्छ. हे स्वामिन्! आदेशः प्रमाणमित्युक्त्वा प्रणम्य च गौतमस्तत्र गच्छति। अथ प्रभोः परिवारं वदति-सहस्तदीक्षिताः साधवश्चतुर्दशसहस्र(१४०००)प्रमाणा अभूवन्, षट्त्रिंशत्सहस्र(३६०००) प्रमाणाः साध्व्यश्च संजाताः, एकोनष-

१—ग्रन्थान्तरे त्रिषष्टिशलाकापुरुषाः नामान्तरेण अपि दृश्यते तत्त्व तु ज्ञानिनो विदन्ति।

ष्टिसहस्राधिकलक्ष(१५९०००)प्रमाणाः श्राद्धाश्च संजाताः, द्विगुणाः (३१८०००)श्राविकाः अभूवन्, चतुर्दशाधिकात्रिशत (३१४) प्रमाणाः पूर्वधारिणो जाताः, त्रयोदशशत (१३००) प्रमाणा अवधिज्ञानिनो जाताः, सप्तशत (७००) वैक्रियलब्धिधारिणो मुनयः संजाताः, सप्त शत(७००)केवलिनः संजाताः, पञ्चशत(५००) विपुलमतयो जाताः, चतुःशत (४००) मिता वादिनः संजाताः, अष्टशत (८००)मिता अनुत्तरवासिनः। एवं समस्तसाधुसाध्वीसहितः श्रीवीरप्रभुः षष्ठतपोयुक्तः त्रिंशद्वर्षाणि गृहवासे तस्थौ, सार्धद्वादशवर्षाणि पक्षाधिकानि छद्मस्थावस्थायां स्थितः, त्रिंशद् वर्षाणि यावत् केवलिपर्याये स्थितः; एवं द्विसप्ततिवर्षाणि आयुः प्रपाल्य कार्त्तिकाऽमावास्यानिशायाः पाश्चिमे क्षणे स्वातिनक्षत्रे द्वितीये चन्द्रसंवत्सरे प्रीतिवर्धनमासे, नन्दिवर्धनपक्षे, उपशमदिने, देवनन्दानाम्न्यां रात्रौ, सर्वार्थसिद्धिमुहूर्ते, नागे करणे, पद्मासने स्थिते तुर्यारकान्ते एतत्समये इन्द्रासनं चकम्पे, अवधिज्ञानेन हरिः प्रभोर्निर्वाणकल्याणकसमयं ज्ञात्वा आगच्छति, अत्यन्तमश्रुपूर्णाक्षो विषण्णश्च सन् हस्तौ संयोज्य वक्ति—

गर्भे जन्मनि दीक्षायां, केवले च तव प्रभो ! । हस्तोत्तरं क्षणेऽधुना, तद्गन्ता भस्मको ग्रहः ॥ १ ॥

अतो हे स्वामिन्! करुणानिधान! एकक्षणमात्रमायुर्वृद्धिं स्वस्य कुरु, किं कारणम्? भवतो जन्मराशेरुपरि भस्मग्रह आगतोऽस्ति स द्विसहस्रवर्षं यावत् स्थास्यति, अतो जिनशासनस्य पूजा प्रभावना मन्दा भविष्यति, तेन हेतुना आयुर्दीर्घं कुरुष्व, भवतो दृष्टिपाततस्तस्य तेजो निष्फलं यास्यति, तदा भगवान् वक्ति—हे इन्द्र! एषा वार्ता कदाऽपि नाऽभूत्, न भवति, न चापि भविष्यति; यदायुर्दीर्घतरं भवति. पुनर्भाविपदार्थस्य नाशो नास्ति, तदुत्तीर्णे तु देवा अपि दर्शनं दास्यन्ति, विद्यामन्त्राणि चाल्पेन जापेन प्रभावं दर्श-

ष्यन्ति, जातिस्मरणादिभावाः किञ्चित् प्रकटयिष्यन्ति, तदनन्तरमेकोनविंशतिसहस्रवर्षं यावद् जिनधर्मो वर्तिष्यति, दुःषमकालपर्यन्तम्, एवं कथयित्वा स्थितः, स्वस्य निर्वाणं समीपं ज्ञात्वा पुण्यफलविपाकानि पञ्चपञ्चाशदध्ययनानि तथा पापफलविपाकानि पञ्चपञ्चाशदध्ययनानि च जगाद, तथा षट्त्रिंशदपृष्टव्याकरणानि(उत्तराध्ययनसूत्राऽध्ययनानि)चाभिधाय प्रधानं नामाध्ययनं (मरुदेवाऽध्ययनं) जगद्गुरुरकथयत्, पुनः स्वामिनो मोक्षं समीपं विज्ञाय आसनप्रकम्पतस्तत्र सुराऽसुरेन्द्राः सपरिच्छदाः सर्वेऽपि ईयुः॥

अथ प्रभुः शैलेशीकरणं कृत्वा पञ्चह्रस्वाक्षरोच्चारमितकालेन तुर्येण ध्यानेन एरण्डफलवद् बन्धाभावाद् ऊर्ध्वगतिः सन् यथास्वभावऋजुगत्या मोक्षमुपाययौ। तस्मिन् समयेऽनुद्धरिककुन्थुराशिः समुत्पन्ना, तदा बहुसाधुभिर्विचारितम्—'अद्यदिनादारभ्य संयमो दुराराध्यो भविष्यति'' इति ज्ञात्वाऽनशनं कृतम्, तस्मिन् दिने नवमल्लकि-नवलेच्छकिजातीयाः काशी-कोशलदेशपतयोऽष्टादश गणराजानः अमावास्यादिने उपवाससहिताः पौषधव्रतमङ्गीकृतवन्तः, तद्रात्रौ भावोद्योततीर्थकररहितं दृष्ट्वा ते राजभिः स्वकीयगृहाद् रत्नान्यानाय्य द्रव्योद्योतः कृतः पौषधः पारितः, यद्रात्रौ तीर्थकरो मुक्तिं गतस्तद्रात्रौ देवानां गमनागमनेन महानुद्योतः संजातः अस्मिन्नवसरे देवानां मुखाद् वीरप्रभोर्मोक्षगमनं श्रुत्वा श्रीगौतमस्वामी मनसि चिन्तितवान्—"अहो! भगवता मत्तश्छलं कृतं स्वस्य मुक्तिं ज्ञात्वा अहं दूरीकृतः, ज्ञातं भगवता मम पार्श्वे केवलज्ञानं मार्गयिष्यति, बालवत् कदाग्रहं करिष्यति, वस्त्राञ्चलं गृहीत्वा स्थास्यति, हे स्वामिन्! मया ईदृग् लोभी त्वं न ज्ञातः, केवलज्ञाने दत्ते तु भवतां किमपि न न्यूनमभविष्यत्, हे स्वामिन्! तवाहं परमसेवकोऽभूवम्, मां निराशं त्यक्त्वा गतः, हे भगवन्! महतामेषा वार्ता न युक्ता, हे प्रभो! बलाद् भवतोऽहं केवलज्ञानं नालप्स्यम्

भवता दत्तमेव केवलज्ञानमङ्गीकरिष्यम्, तथापि हे स्वामिन्! अस्मिन्नवसरे अन्तसमये स्वसमीपे रक्षणं युक्तमभूद्, अस्मिन्नवसरे मम प्रेषणं तव न युक्तम्, पुनर्हे प्रभो ! मम केवलज्ञानस्य तृष्णा नासीत्, भवतां दर्शनस्य तृष्णा जाताऽभूत्, अधुना तव दर्शनमपि मम दूरीभूतम्, हे स्वामिन् ! अथाहं कस्य वीर ! इति कथयिष्यामि, मम मनःसंदेहं कस्य पृच्छाविषयी करिष्यामि, को मम सन्देहं भंक्ष्यति, हे स्वामिन्! पुनर्मम हे गौतम! हे गौतम !इति कःकथयिष्यति?''एवं विलापं कुर्वन् मनसि विचारयाति–रे जीव!वराक! त्वं ग्रथिलो जातः, स तु नीरागी त्वं तु सरागी, वीतरागेण रागकरणं न युक्तम्, एकाङ्गिप्रीतिकरणे दीपे पतङ्गवद् दुःखी भविष्यसि, यस्य नाम वीतरागः स कस्मिन् रागं करोति, स भगवान् स्वस्य वीतरागं हि नाम सत्यं कृतवान्, अहमज्ञासिषं भगवान् मम नाम पुनःपुनःब्रूते तर्हि ममोपरि रागं रक्षति, परमाश्विनमेघाडम्बरवद् अन्तं दत्त्वा गतः.स क्व अहं क्व कस्य कोऽपि नास्ति, एवं मोहनीयं निराकृत्य क्षीणमोहं गुणस्थानकं गत्वा तत्कालमेव श्रीगौतमस्य केवलज्ञानमुत्पन्नम् । अथ यद्रात्रौ प्रभुर्मुक्तिं गतः तद्रात्रौ भावोद्योतो गतः,ततो लोकैरुद्योतकरणार्थं स्वस्वगृहे रत्नमयी दीपमालिका कृता, तद्दिनाद् लोकमध्ये दीपमालिकापर्वणः प्रसिद्धिर्जाता । अथ यद्रात्रौ वीरप्रभुर्मुक्तिं गतः, तदा समस्तसंघ उद्विग्नः स्थितः, संघस्य मुखाब्जं म्लानतां गतम्, तस्मिन् समये गौतमस्वामिनः केवलं ज्ञानमुत्पन्नं तदा समस्तोऽपि संघो हृष्टो जातः। इन्द्रः प्रभोर्निर्वाणोत्सवं कृत्वा प्रभोर्देहसंस्कारं करोति, ततः केचिद् देवाः प्रभोर्दंष्ट्रां लात्वा गच्छन्ति, केचिद् देवा दन्तान् गृह्णन्ति, केचिद् भस्म गृह्णन्ति शेषं क्षीरसमुद्रे प्रवाहयंति, पश्चात् प्रातःकाले गौतमस्वामिनः केवलज्ञानमहोत्सवं कृत्वा सर्वे देवाः संभूय नन्दीश्वरद्वीपेऽष्टाह्निकं महोत्सवं कृत्वा स्वस्मिन् स्वस्मिन् स्थाने गच्छन्ति । अथ

द्वितीयादिने सुदर्शना भगिनी शोकदूरीकरणार्थं नन्दिवर्धनं स्वगृहे भोजनं कारयति, तस्माद् दिनाद् एषा द्वितीया 'भाईबीज' इति प्रसिद्धिं प्राप्ता । प्रथमं लोकैः रत्नमया दीपाः कृताः, पश्चाल्लोकैः रूप्यमयाः कृताः । अथ पञ्चमकालप्रभावतो मृत्तिकामया दीपाः कुर्वन्ति । एवमार्यसुहस्तिसूरिवोक्ति–हे संप्रते ! इदं दीपालिकापर्व सर्वेषामुत्तमं कथितं, यथा वृक्षाणां मध्ये कल्पवृक्षः, देवानां मध्ये इन्द्रः, राज्ञां मध्ये चक्रवर्ती, नक्षत्राणां मध्ये चन्द्रमाः, तेजस्विनां मध्ये सूर्यः, सर्वधातूनां मध्ये सुवर्णम्, काष्ठमध्ये चन्दनम्, वनमध्ये नन्दनवनं तथा सर्वपर्वणां मध्ये दीपालिकापर्व । अस्मिन् दिने श्रीवीरप्रभुर्मुक्तिं गतः, पुनः श्रीगौतमस्य केवलज्ञानमुत्पन्नम्, अतो हे राजन् ! इदं दीपालिकापर्व सिद्धिदायकं भवतु ।

## अथ प्रशस्तिश्लोकाः ।

षण्नन्दवसुचन्द्राब्दे ( १८९६), ज्येष्ठमासे सिते दले । चन्द्रघस्रे त्रयोदश्यां, साध्ययोगे हितावहे ॥ १ ॥
दीपालिपर्वणो व्याख्या, गद्यबन्धेन निर्मिता । अपशब्दादिदोषश्च, शोधनीयः सदा बुधैः ॥ २ ॥
स्वच्छे खरतरगच्छे, श्रीसौभाग्यगणाधिपे । धर्मराज्यं कलावर्ये, प्रकुर्वति सुविस्तरे ॥ ३ ॥
वाचनाचार्यवर्यस्य, रामचन्द्रगणेर्मुदा । शिष्येणाऽऽजिमगंजे च, चतुर्मासीस्थितेन वै ॥ ४ ॥
पाठकमेदचन्द्रेण, रायमल्लकवेर्मुदा । पठनार्थमिदं रम्यं, कृतं शुभतराशया ॥ ५ ॥ युग्मम् ।

इति श्रीदीपमालिकाव्याख्यानं सम्पूर्णम् ।

# अथ रोहिणीकथा प्रारभ्यते ।

गाथा-उच्छिट्ठमसुन्दरयं, भत्तं तह पाणियं च जो देइ । साहूणं जाणमाणो, भुत्तं पि न जिज्जए तस्स ॥ १ ॥

व्याख्या—यो जीव उच्छिष्टमसुंदरं च भक्तं तथा पानीयं जानन् सन् साधुभ्यो ददाति, तस्य भुक्तमप्यन्नं न जीर्यते, तस्य शरीरेऽजीर्णरोगो भवति; यथा श्रीवासुपूज्यस्य मघवाभिधपुत्रस्य पुत्रिकाया रोहिण्या जीवः पूर्वभवे दुर्गन्धाभिधाना कुष्ठिनी जाता. साधोः कटुतुंबकाहारदानात् ॥ १ ॥ रोहिणीकथा चेत्थं—

श्रीवासुपूज्यमानम्य, तथा पुण्यप्रकाशकम् । रोहिण्याश्च कथायुक्तं, रोहिणीव्रतमुच्यते ॥ १ ॥

श्रीचंपानगर्यां श्रीवासुपूज्यस्य पुत्रो मघवाभिधो राजा राज्यं करोति, तस्य लक्ष्मी नाम्नी राज्ञी सुशीला सदाचारा च वर्त्तते, तस्या अष्टौ पुत्राः सन्ति, अष्टानां पुत्राणामुपर्येका रोहिणी नाम्नी पुत्री वर्त्तते, सा चतुःषष्टिकलावती रूपलावण्यवती सौभाग्यगुणवती च जाता । अथ क्रमेण यौवनावस्थां प्राप्ता, ईदृशीं तां दृष्ट्वा राजा चिन्तयति—नूनमियं रोहिणी वरयोग्या जाताऽस्ति, अथ राज्ञा स्वयंवरमण्डपं मण्डयित्वा सर्वेऽपि राजकुमारा आकारिताः, तेऽपि च मण्डपे समागत्य स्थिताः । तस्मिन्नवसरे रोहिण्यपि

स्नानं विलेपनं च कृत्वा क्षीरोदकसदृशे श्वेतवस्त्रे परिधाय मुक्ताभरणैरलंकृता साक्षाद् देवीव शिविकायां स्थित्वा सखीभिः परि-
वृता तत्रागता । अथैका सखी तां रोहिणीं पुरस्कृत्य तस्या अग्रे राजकुमाराणां नाम-गोत्र-बल-वयोयशःप्रभृतीनां वर्णनं करोति ।
अथ तयाऽन्यानपि राजकुमारान् वर्जयित्वा नागपुरराज्ञो वीतशोकस्य पुत्रोऽशोककुमाराभिधो वृतः, तस्य कण्ठे च तया निजव-
रमाला क्षिप्ता, ततोऽन्ये सर्वेऽपि राजकुमाराः सहर्षा मिलित्वा तां च तया सह विवाह्य ततो भोजन-वस्त्र-ताम्बूलादि गृहीत्वा स्वस्व-
गृहे गताः । अशोककुमारोऽपि तत्र कतिचिद् दिनानि स्थित्वा सवधूको हस्त्यश्ववस्त्राभरणादियुतः प्रस्थाय नागपुरसमीपे समाग-
तः । तदा वीतशोकराज्ञा तस्य पुरप्रवेशमहोत्सवः कृतः । कुमारोऽपि रोहिण्या सह विषयसुखानि भुनक्ति । अथैकदा शुभे दिनेऽ-
शोककुमाराय राज्यं दत्त्वा वीतशोको राजा दीक्षां गृहीतवान् । ततोऽशोकराजा सुखेन राज्यं पालयति । क्रमेण अशोकराज्ञोऽष्टौ
पुत्राश्चतस्रश्च पुत्रिका जाताः । अथैकदा रोहिण्या सहितो राजा सप्तम्यां भूम्यां गवाक्षे स्थितो लोकपालाख्यं पुत्रमुत्सङ्गे धृत्वा
क्रीडयति । तस्मिन् समये नगरे कस्याश्चित् स्त्रियः पुत्रो मृतः । सा स्त्री रुदती विलापांश्च कुर्वती तस्मिन् मार्गे समागता । तां
दृष्ट्वा रोहिण्या राज्ञे पृष्टम्—भो महाराज ! किमिदं नृत्यम् ?, राजा जगाद—हे प्रिये ! त्वं साहंकारं वचनं मा ब्रूहि, रोहिण्योक्तम्—
स्वामिन्नहमहंकारं न करोमि, एवंविधं नृत्यं मया कदापि न दृष्टमतोहं पृच्छामि । तदा राज्ञोक्तम्—एतस्याः स्त्रियः पुत्रो मृतोऽ-
स्ति, अतएवेयं रोदनं करोति । रोहिण्योक्तम्—स्वामिन् ! अस्यै रोदनं केन शिक्षितं भवेत् ?, तत् श्रुत्वा राज्ञोक्तम्—तवाप्यहं रोदनं
शिक्षयामि । इत्युक्त्वा रोहिण्युत्सङ्गस्थं तस्या लघीयांसं पुत्रं लोकपालाख्यं राजा निजहस्तेन भूमावपातयत् । तदा तत्रस्थाः सर्वे

जनास्तं तथा पतन्तं दृष्ट्वा हाहारवं कर्तुं लग्नाः । परं रोहिण्या हृदि किञ्चिन्मात्रमपि दुःखं न जातम्, इतस्तं पतन्तं बालकं नगराधिष्ठितदेवेन धृत्वा सिंहासने स स्थापितः, तद् दृष्ट्वा सर्वे जनाश्चमत्कृताः सन्तो विचारयामासुः-नूनमियं रोहिणी धन्यैव या दुःखस्य वार्तामपि न जानाति ।

इतश्च तत्र श्रीवासुपूज्यतीर्थंकरस्य रूप्यकुम्भस्वर्णकुम्भनामानौ द्वौ शिष्यौ ज्ञानवन्तौ समागतौ, तदा राजा परिवारयुतस्तौ वन्दितुं गतः, गुरुभ्यां च देशना दत्ता, देशनाश्रवणानन्तरं राज्ञा पृष्टम्-भो भगवन् ! अनया रोहिण्यैवंविधं किं तपः कृतं येनेयं दुःखस्य वार्तामपि न जानाति, एतस्या अष्टौ पुत्राः चतस्रश्च पुत्र्यो जाताः सन्ति, तथा ममापि तस्या उपरि अतीव स्नेहो वर्तते, अतः तस्याः कथां युवां कृपां विधाय कथयतम्, तच्छ्रुत्वा गुरुः कथयति, अस्मिन्नेव नगरे धनमित्रनामा श्रेष्ठी वसति, तस्य धनमित्रा नाम्नी च भार्याऽस्ति, तस्या एका दुर्गन्धा नाम्नी पुत्री, सा कुरूपा दुर्भगा च जाता, एवंविधां तां कुरूपां दृष्ट्वा कोऽपि द्रव्येश्वरो नो परिणयति, तदा पित्रा एकं मार्यमाणं श्रीषेणाभिधं चौरं मोचयित्वा तस्या दुर्गन्धायाः स स्वामीकृतः, सोऽपि रात्रौ दुर्गन्धां त्यक्त्वा नष्ट्वा गतः, तदा श्रेष्ठी विषादं करोति, विलपन्तीं पुत्रीं प्रति श्रेष्ठी कथयति, हे पुत्रि ! त्वं विलापं मा कुरु, गृहद्वारि स्थिता दानं देहि, धर्मं च कुरु येन तव दुष्कर्मदोषः प्रलीयते, अथ सा तदङ्गीकृत्य प्रत्यहं दानं ददाति । अथैकदा कश्चिद् ज्ञानी गुरुस्तत्र समागतः, तदा धनमित्रेण तं गुरुं वन्दित्वा तस्याः कन्यायाः स्वरूपं पृष्टम्, गुरुर्भणति-गिरिनारनगरे पृथिवीपालाभिधो राजाऽऽसीत्, तस्य सिद्धिमत्यभिधाना राज्ञी वर्तते, अथैकदा स राजा निजराज्ञीसहितो वने क्रीडां कर्तुं याति, तस्मिन् समये कश्चिद् मासक्षमणपार-

नकः सागरनामा मुनिः समागच्छति. भिक्षार्थमायातं मुनिं सागरं वेक्षिष्ट, दृष्ट्वा विचारयति—एष साधुर्गुणाकरो महातीर्थं पुण्यपा-
त्रमस्ति, तस्य दर्शनमपि महते पुण्याय. यत उक्तम्—

साधूनां दर्शनं पुण्यं, तीर्थभूता हि साधवः । तीर्थं फलति कालेन, सद्यः साधुसमागमः ॥ १ ॥

तदस्मै निःस्पृहाय मुनिसत्तमाय दत्तं दानं महते फलाय भवेद्, इति ध्यात्वा राजा स्वमियां प्राह—हे वरानने ! अस्मै मुनये वलित्वा दानं देहि. तच्छ्रुत्वा क्रीडान्तरायं मत्वा बहिः प्रमोदभाग् अन्तश्च दुष्टा सा गृहं प्रति चचले, आगत्य गृहे द्वेषवशात् तया क-टुतुम्बिकाशाकं मुनये दत्तम्, मुनिना तेनाहारेण पारणकं कृतम्, तद्भक्षणाच्च मुनिः पञ्चत्वं प्राप, शुभध्यानाच्च स देवलोके देवोऽभू-त्, तां वार्तां श्रुत्वा राज्ञा राज्ञी स्वदेशतो निष्कासिता, सा सप्तमे दिने वराकी कुष्ठिनी जाता, चिरं जनैर्निन्द्यमाना सा मृत्वा षष्ठं नरकं जगाम । तत उद्धृत्य तिरश्चां योनौ समुत्पन्ना,ततो दुःखप्रचुरे सप्तमे नरके. एवं सर्वेषु नरकेषु सा पापा भ्रान्त्वा, ततः सा सर्पिणी, उष्ट्री, शृगाली, कुर्कुटी, तथा शूकरी, ततो गृहगोधा, जलौका, मूषिका, काकी, शूनी, बिलाडी, ततो रासभी, ततो गौः जाता तेषु भवेषु प्रायशः अग्निशस्त्रघातादिभिः मृतिरभूद्, धेनुभवे स्वान्त्यसमये गुरुदत्तं नमस्कारं श्रुत्वाऽनुमोदयामास, मृतिं चाप, ततो नमस्कारप्रभावेण सा दुर्गन्धा दुर्भगा च तव नन्दिनी अभूत् । ततो दुर्गन्धा निजपूर्वभवं दृष्ट्वा करौ योजयित्वा पृच्छति—हे स्वामि-न् ! एतस्माद् दुःखादहं कथं निःसरिष्यामि ? तत् कथ्यताम्. तदा मुनिना उक्तम्—त्वं दुःखभञ्जकं रोहिण्या व्रतं कुरु, तयोक्तम्-हे भगवन् ! केन विधिनाहं तद्व्रतं करोमि, मुनिनोक्तम्, शृणु—रोहिणीनक्षत्रदिने श्रीवासुपूज्यजिनबिम्बं पूजयित्वा सप्तमासाधिकं

सप्तवर्षं यावद् उपवासं कुरु एवं शुभध्यानयुततपःप्रभावात्तव शुभं भविष्यति,पश्चाच्च त्वया तत्तपस उद्यापनं विधेयं येन तव सर्वं दुःखं यास्यति, सुगन्धराजवत्, तच्छ्रुत्वा दुर्गन्धा मुनिं प्रति पृच्छति–हे भगवन् ! तस्य सुगन्धराजस्य वृत्तान्तं मयि कृपां विधाय कथयत, तदा मुनिर्वदति–सिंहपुरे सिंहसेनो राजा तस्य कनकप्रभाभिधाना राज्ञी वर्तते, तयोर्दुर्गन्धाख्यः पुत्रोऽभूत्, स क्रमेण यौवनं प्राप्तः, परं कस्यापि मनसि न रोचते, एकदा श्रीपद्मप्रभतीर्थंकरस्तत्रागतः, तं पद्मप्रभं वन्दित्वाऽसौ निजदुर्गन्धत्वकर्मणो विपाकं पृच्छति, तदा श्रीसर्वज्ञप्रभुः कथयति–नागोरनगराद् द्वादशे क्रोशे नीलनामा पर्वतोऽस्ति, तस्योपरि एका शिला तत्रैको मुनिर्मासक्षमणादि तपः करोति, तत्तपःप्रभावाच्च आखेटकस्याखेटकं निष्फलं याति,तदा स लुब्धकस्तस्य मुनेरुपरि ईर्ष्यां करोति।एकदा स ऋषिः पारणार्थं ग्राममध्ये प्राप्तः, तस्मिन् समये तेन लुब्धकेन शिलाया अधोऽग्निं प्रज्वाल्य सा शिला अतीवोष्णा विहिता। अथ स ऋषिः पारणकं विधाय शिलाया उपरि स्थितः, बहुतापात् शुद्धध्यानाच्च स ऋषिः केवलज्ञानं प्राप्य मृत्वा मोक्षं गतः, अथ ऋषिघातात् स लुब्धकः कुष्ठी जातः, यतः—

ऋषिहत्याकरो जीवो, दुःखं भुञ्जति भूतले। संसारसागरे घोरे, पीड्यते च पुनः पुनः ॥ १ ॥

पश्चाद् मृत्वा स सप्तमीं नरकावनिं गत्वा ततो मत्स्यो भूत्वा गोपालो जातः, परं स दरिद्री जातः, केनचिद् वणिजा च स नमस्कारं शिक्षितः,पश्चाद् दावानलमध्ये ज्वलितः,नमस्कारप्रभावाच्च त्वं राज्ञःपुत्रोऽयं दुर्गन्धोऽभूः,तच्छ्रुत्वा जातिस्मरणं प्राप्य स प्रभुं पृच्छति–हे भगवन् ! कथमहमथ सुगन्धो भवामि? तस्योपायं कृपां कृत्वा कथयत, तदा श्रीतीर्थंकरेण भणितम्-त्वं सप्तमासा-

धिकानि सप्तवर्षाणि यावद् रोहिणीतपः कुरु, पश्चाच्च तस्य तपसः उद्यापनं कुरु, तच्छ्रुत्वा तेन रोहिणीतपः कृतम्, यस्य प्रभावात् स सुगन्धोऽभूत्। इति कथां श्रुत्वा सा दुर्गन्धा रोहिणीतपो विधिपूर्वकं कृत्वा सुगन्धा जाता, पश्चाद् मृत्वा सा देवी अभूत्, ततश्च्युत्वा चम्पायां श्रीवासुपूज्यस्य मघवपुत्रस्य पुत्रिकेयं रोहिणी नाम्नी तव राज्ञी जाता, पूर्वभवकृततपःप्रभावाद् इयमाजन्म यावद् दुःखं न वेत्ति, पुनर्हे अशोकराजेन्द्र ! अस्या उपरि तवाधिकः स्नेहः कुतो वर्तते ? तस्यापि कारणं शृणु-सिंहसेननामा नृपतिः स्वं सुगन्धाख्यं पुत्रं राज्येऽभिषिच्य सुगुरोः पार्श्वे दीक्षां ललौ, अथ सुगन्धराजोऽपि जिनशासनमाराध्य प्रान्ते समाधिना मृत्वा देवभवं गतः. ततश्च्युत्वा इहैव जम्बूद्वीपे विदेहे पुष्कलावत्यां विजये पुण्डरीकिणीनगर्यां विमलकीर्तिराज्ञः सुभद्राख्यायाः सधर्मिण्याः कुक्षौ चतुर्दशमहास्वप्नसूचितः स देवजीवोऽवातरत् । अथ क्रमेण शुभेऽह्नि सा देवी शुभलक्षणं पुत्रं प्रासूत, तस्य पित्रा अर्ककीर्तिरिति नाम निर्मितम्, क्रमेण स चक्रवर्ती जातः, राज्यं भुक्त्वा जितशत्रुमुनेः पार्श्वे स दीक्षामादाय दुष्करं तपस्तप्त्वा स्वायुःक्षये च मृत्वा द्वादशे देवलोकेऽच्युतेन्द्रोऽभूत्. ततश्च्युत्वा त्वमयमशोकराजा जातः, रोहिण्याश्च वल्लभोऽभूः, युवाभ्यां रोहिणीतपःकरणाद् युवयोः परस्परमधिकः स्नेहो जातः । अथ त्वं पुत्राणां कारणं शृणु मथुरायामग्निशर्माख्यो ब्राह्मणो वसति, तस्य सप्त पुत्राः, पर ते दरिद्रिणः. एकदा पाटलीनगरे ते सप्तापि भ्रातरो भिक्षार्थं गच्छन्ति, तदा वाटिकामध्ये कश्चिद् राजकुमारः कन्दर्पावतारः क्रीडति. तं दृष्ट्वा शिवशर्मा ब्राह्मणः स्वबान्धवान् वक्ति-भो बान्धवाः ! विधिना कियदन्तरं कृतमस्ति, अयं राजकुमारो मनोवाञ्छितं सुखं भुनक्ति, वयं तु भिक्षार्थं गृहे गृहे भ्रमामः. तदैकेन भ्रात्रोक्तमस्मिन् विषये कस्योपालम्भो दीयते ? पूर्वभवेऽस्मा-

भिः पुण्यं न कृतम्, अनेन राजकुमारेण च सुकृतं कृतम्, अतोऽसौ सुखं भुनक्ति. तदा तैः सर्वैरपि ब्राह्मणपुत्रैः जीवदयायुतं धर्मं पालयित्वा प्रान्ते गुरोः पार्श्वे दीक्षा गृहीता. मृत्वा च ते सप्तमे देवलोके देवा जाताः, ततश्च्युत्वा तव गुणपालादय इमे सप्त पुत्रा अभूवन्।तवाष्टमपुत्रजीवश्च वैताढ्यवासी क्षुल्लकविद्याधरोऽभूत्; स निरन्तरं नन्दीश्वरद्वीपे शाश्वतीं जिनप्रतिमाम् अपूजयत्, धर्मं चाकरोत्, स विद्याधरो मृत्वा सौधर्मे देवो जातः, ततश्च्युत्वा तवायमष्टमो लोकपालाख्यः पुत्रो बभूव, अथ चतसृणां पुत्रीणां सम्बन्धं शृणु-वैताढ्यपर्वते एको विद्याधर आसीत्, तस्य चत्वारः पुत्रिका अभूवन्, ता महारूपवत्यो गुणवत्यश्चासन्, एकदा वनमध्ये क्रीडन्त्यस्ता गुरुभिः दृष्टा,आलापिताश्च-भो पुत्र्यः! यूयं धर्मं कुरुध्वम्, युष्माकमायुरेकदिनप्रमाणमेव विद्यते. ताभिरुक्तम्-हे भगवन्! एकदिनमध्ये को धर्मो भविष्यति, तदा गुरुभिरुक्तम्-यूयमद्य शुक्लज्ञानपञ्चमीतपः कुरुध्वम्, अद्यैव दिने पञ्चम्या उपवासं कृत्वा गृहे गत्वा देवपूजां च कृत्वा पुण्यस्यानुमोदनां कुरुध्वम्, ताभिरपि गृहे गत्वा तथैव कृतम्. अथ तस्मिन्नेव रात्रौ विद्युत्पाताच्चतस्रोऽपि मृत्वा प्रथमदेवलोके देवा जाताः, ततश्च्युत्वा तवैताः पुत्र्यः संजाताः. अथ ताः सर्वा वार्ताः श्रुत्वा राजा जातिस्मरणं लब्ध्वा सपरिवारो रूप्यकुम्भ-स्वर्णकुम्भगुरू नत्वा निजगृहे समागतः । कियत्कालानन्तरं राजा राज्ञी पुत्राः पुत्र्यश्च श्रीवासुपूज्यप्रभोः समीपे दीक्षां गृहीत्वा कर्मक्षयं च कृत्वा मोक्षं गताः, उक्तं च-

रोहिणीतप-पञ्चमीतप, गुरुआ ए तप जाणी । दुःखित होय करी सुखी होवे, बोले केवलनाणी ॥ १ ॥

इति रोहिणी-अशोकराजकथा सम्पूर्णा ॥

## अथ लघु साधु–आराधना प्रारभ्यते ।

"खामेमु सव्वमणे" इत्यत्र–

व्यवहारराख्ये, राशौ निवसता मया । अनन्तजन्तुसंतानं, यद्दूनं क्षमयामि तत् ॥ १ ॥

व्यवहारराश्यराशौ च, पृथ्वीकायभृता मया । लोह-लोष्टो पलीभूय, ये हताः क्षमयामि तत् ॥ २ ॥

नदी-नदीश कूपेषु, जलरूपेण ये मया । जन्तवः संभिताः केऽपि, संहताःक्षमयामि तत् ॥ ३ ॥

प्रदीपन-तडिद्व, दीपप्रभृतिमूर्तिना । ये मया जघ्निरे तेज-स्कायेन क्षमयामि तत् ॥ ४ ॥

महावृष्टि-हिम-ग्रीष्म-धूलिदुर्गन्धबन्धुना । ये मया वायुकायेन, बाधिताः क्षमयामि तत् ॥ ५ ॥

पीडिता दण्ड-कोदण्ड-कण्डस्य कन्दताभृता । ये वनस्पत्यात्मानो, मयाऽत्र क्षमयामि तत् ॥ ६ ॥

अथ कर्मवशात्प्राप्य, त्रसतां परिता मया । राग-द्वेष-मदान्धेन, येऽर्दिताः क्षमयामि तत् ॥ ७ ॥

अपराधः क्षमन्तां मे, तेऽपि सर्वत्र जन्तवः । सर्वभूतेषु मे मैत्र्यम्, आस्तां वैरं न कुत्रचित् ॥ ८ ॥

"सामाइय-चउविसत्थयाइ०" इत्यत्र—

राश्यव्यवहाराख्ये, अनन्तजन्तुमघट्टनात् । यया मे कर्म कृत्तं तां, पीडामप्यनुमोदये ॥ ९ ॥

जिनानां प्रतिमा-चैत्य-भृङ्गार-मुकुटादिषु । योऽसौ पृथ्वीमयः कायः, जज्ञे तमनुमोदये ॥ १० ॥

जिनस्नात्रेषु पात्रेषु, दैवादुपकृतो भवेत् । यो मे जलमयः कायः, मायस्तमनुमोदये ॥ ११ ॥

धूपाङ्गारे च दीपे च, जिनानां पुन एव यः । मम तेजोमयः कायः, जातस्तमनुमोदये ॥ १२ ॥
धूपक्षेपेऽर्हतां संघे, श्रान्ते वा तीर्थवर्त्मसु । यो मे वायुमयः कायः, ववौ तमनुमोदये ॥ १३ ॥
मुनीनां पात्र-दण्डेषु, जिनार्चा-कुसुमेषु च । वनस्पतिमयः कायः, योऽभूत्तमनुमोदये ॥ १४ ॥
क्वाऽपि सत्कर्मयोगेन, जिनधर्मोपकारकः । आसीत्त्रसमयः कायः, यो मे तमनुमोदये ॥ १५ ॥
इत्यनन्तभवोपात्तं, दुष्कृतौघमगर्हत । कदाचिद्रचितं किञ्चित्, सुकृतं चानुमोदत ॥ १६ ॥
नाणे दंसण-चरणे, तव-विरिए सिद्धसक्खियं सुद्धं । गेण्हामि उच्चरामि, वयाइं जहा गहियभंगाइं ॥ १ ॥
पुढवि-दग-अगणि-वाऊ, वण-बि-ति-चउरिंदिएसु जीवेसु । नरय-तिरिय-नरा-मर-जीएसु खामेमि खमयामि ॥ २ ॥
जीववहा१लीय२चोरी,३मेहुण४धणमुच्छ५कोह६मय७माया८।लोहो९पिज्जं१०दोसो,११कलहं१२अब्भक्खण१३पेसुन्नं १४ ॥३॥
अरइरइ १५ परविवायं, १६ मायामोसं च १७ मिच्छसल्लं च १८ । इय पावठाणाइं, अट्ठारस वोसिरामि अहं ॥ ४ ॥
जं राग-दोस-मोहेण, तिविहं तिविहेण तिहुयणम्मि मए । तिविहं धम्मविरुद्धं, इहं न भवियं पि तं निंदे ॥ ५ ॥
दाणं सीलं च तवं, जिणवंदणपूअणं च सज्झायं । जीवदयं तिकालं, अणुमोएमो निय-परस्स ॥ ६ ॥
जिण-सिद्ध-सूरि-उवज्झायं, साहु-साहम्मियभव्वजीवेसु । तिकालं जं सुकयं, तमहं अणुमोयए सव्वं ॥ ७ ॥
सागारमणागारं, सरणं जिण-सिद्ध-साहु-धम्मं च । पंचपरमेट्ठिमंतं, समरेमि सुहभावसंजुत्तो ॥ ८ ॥

परिसर्प ४ भुजपरिसर्प ५ भेदात् पञ्च भेदाः, तत्र जलचराणां मच्छ-कच्छपप्रमुखा अनेके भेदाः, तेषां संमूर्च्छिमानां गर्भजानां च उत्कृष्टं पूर्वकोटिरायुः, योजनसहस्रं च स्वयंभूरमणगतानां देहमानम् ॥ १ ॥ स्थलचराः—तेषां सिंह-व्याघ्र- चीतरा-सरभ-हस्ति-घोटक-उष्ट्र-बलिवर्द-खर-गो-भैंस-छाली-हरिण-रोझ-ससला-सुअर-रीछ-साबर-कुतरा-सीयालियाप्रमुखा अनेके भेदाः, तत्र युगलिकानां तेषां ३ पल्योपमानि उत्कृष्टमायुः, ३ कोशदेहमानम्, इतरेषां च पूर्वकोटिरुत्कृष्टमायुः, षट्कोशदेहमानं च । २ । खेचराणां हंस-बग-सारस-मीनाण-समली-गृध्र काग-घूक-होला-चिडकला-नीलचांस-सूडाप्रमुखा अनेके भेदाः, तेषां पल्योपमस्य असंख्येयो भागः उत्कृष्टमायुः, धनुःपृथक्त्वं च देहमानम् ।३। उरपरिसर्पाणां अजगर-कालंदार-सर्पप्रमुखा अनेके भेदाः, तेषां पूर्वकोटिरुत्कृष्टमायुः, योजनसहस्रं च देहमानम् । ४ । भुजपरिसर्पाणां गोह-नउल-कार्किडा-गिलोई-बांभणीप्रमुखा अनेके भेदाः, तेषां पूर्वकोटिरुत्कृष्ट-मायुः, कोशपृथक्त्वं च देहमानम्, एषां तिरश्चां ४ लक्षयोनयः । एतेषां छेदन-भेदन-कदर्थन-अङ्गावयवकर्तन-नासावेध-पृष्टिगालन-दंभना-अधिकभारारोपण-कर्कशघात-चारपानीयनिरोधादिदुःखोत्पादनेन विराधना कृता भवति, इहभवे० मिथ्यादु० ॥ १२॥ अथ मनुष्याः । तेषां न४५ लक्षप्रमाणमनुष्यक्षेत्रे ५ भरत,५ ऐरवत, ५ विदेह,एवं १५ कर्मभूमि, ३० अकर्मभूमि, ५६ अन्तरद्वीपेषु गर्भज-पर्याप्तापर्याप्तसंमूर्च्छिमभेदेन ३०३ भेदा भवन्ति, ते च आर्य—अनार्य—ब्राह्मण-वैश्य-शूद्र-राजा-रंक-दृष्ट-अदृष्ट-ज्ञात-अज्ञात-श्रुत-अश्रुत-स्वजन-परजन-मित्र-शत्रु-प्रत्यक्ष-परोक्षादिभेदाद् अनेकविधाः, तेषां युगलिकानां ३ पल्योपमानि उत्कृष्टमायुः, ३ कोशदेहमानम्, इतरेषां तु पूर्वकोटिरुत्कृष्टमायुः, ५०० धनुष्यदेहमानम्, चतुर्दश लक्षयोनयः, एतज्जीवानां विराधना कृता भवति, इहभवे०मिथ्या दु०

# अथ श्रावक–आराधना प्रारभ्यते।



श्रीसर्वज्ञं जिनं नत्वा, दुष्टकष्टप्रणाशनम्। श्रावकाराधनां वक्ष्ये, सुगमां शिष्यहेतवे ॥ १ ॥

अत्राऽऽराधनायां पञ्चाधिकाराः–सम्यक्त्वशुद्धिः, अष्टादशपापस्थानपरिहारः, चतुरशीतिलक्षजीवयोनिक्षामणम्, दुष्कृतगर्हा, सुकृतानुमोदना। तथाहि–प्रथमम् ईर्यापथिकीं प्रतिक्रम्य मुखवस्त्रिकां प्रतिलेख्य वन्दनकं द्वयं दत्त्वा "इच्छाकारेण संदिस्सह भगवन्! सम्मत्त समायिय सुय सामायियं आरोवणत्थं चेइयाइं वंदावेह" इत्युक्त्वा चैत्यवन्दनां प्रतिमाग्रे कृत्वा क्षमाश्रमणद्वयं च दत्त्वा आराधनाकृद् वदति–'भगवन्! आराधनां श्रावय' ततो गुरुर्वदति–विधिपूर्वकं शृणु, तत्रादौ सम्यक्त्वशुद्धिः तथाहि–

अरिहंतो मह देवो, जावज्जीवं सुसाहुणो गुरुणो। जिणपणत्तं तत्तं, इय समत्तं मए गहियं ॥ १ ॥

अर्हन् भगवान् ३४ अतिशयसहितः, ६४ इन्द्रमहितः, अष्टमहाप्रातिहार्ययुक्तः, १८ दोषनिर्मुक्तः, अनन्तगुणव्याप्तः, परमपदवीप्राप्तो देवाधिदेवः, श्रीवीतरागदेवो मम देवः १. तथा पञ्चमहाव्रतप्रतिपालकाः, ४२ आहारदूषणटालकाः, ९ समितिसमितास्त्रिगुप्तिगुप्ताः, ६जीवनिकायरक्षाकारकाः, १८ सहस्रशीलांगरथधारकाः, रागद्वेषनिवारकाः, संसारसमुद्राद् भव्यजीवतारकाः, क्रियाकलाप-

परिसर्प ४ भुजपरिसर्प ५ भेदात् पञ्च भेदाः, तत्र जलचराणां मच्छ-कच्छपप्रमुखा अनेके भेदाः, तेषां संमूर्च्छिमानां गर्भजानां च उत्कृष्टं पूर्वकोटिरायुः, योजनसहस्रं च स्वयंभूरमणगतानां देहमानम् ॥ १ ॥ स्थलचराः—तेषां सिंह-व्याघ्र- चीतरा-सरभ-हस्ति-घोटक-उष्ट्र-गर्दभ-खर-गौ-भैंस-छाली-हरिण-रोझ-ससला-सूअर-रींछ-सावर-कुतरा-सीयालियाप्रमुखा अनेके भेदाः, तत्र युगलिकनां तेषां ३ पल्योपमानि उत्कृष्टमायुः, ३ क्रोशदेहमानम्, इतरेषां च पूर्वकोटिरुत्कृष्टमायुः, षट्क्रोशदेहमानं च । २ । खेचराणां हंस-बग-सारस-मीनाण-समली-गृध्र काग-घूक-होला-चिडकला-नीलचांस-सूडाप्रमुखा अनेके भेदाः, तेषां पल्योपमस्य असंख्येयो भागः उत्कृष्टमायुः,धनुष्पृथक्त्वं च देहमानम् ।३। उरपरिसर्पाणां अजगर-कालंदार-सर्पप्रमुखा अनेके भेदाः, तेषां पूर्वकोटिरुत्कृष्टमायुः, योजनसहस्रं च देहमानम् । ४ । भुजपरिसर्पाणां गोह-नउल-कांकिडा-गिलोई-बांभणीप्रमुखा अनेके भेदाः, तेषां पूर्वकोटिरुत्कृष्टमायुः, क्रोशपृथक्त्वं च देहमानम्,एषां तिरश्चां ४ लक्षयोनयः । एतेषां छेदन-भेदन-कदर्थन-अङ्गावयवकर्तन-नासावेध-पृष्टिगालन-दमना-अधिकभारारोपण-कर्कशवात-चारपानीयनिरोधादिदुःखोत्पादनेन विराधना कृता भवति, इहभवे० मिथ्यादु० ॥ १२॥ अथ मनुष्याः । तेषां च४५ लक्षप्रमाणमनुष्यक्षेत्रे ५ भरत,५ ऐरवत, ५ विदेह,एवं १५ कर्मभूमि, ३० अकर्मभूमि, ५६ अन्तरद्वीपेषु गर्भज-पर्याप्तापर्याप्तसंमूर्च्छिमभेदेन ३०३ भेदा भवन्ति, ते च आर्य—अनार्य—ब्राह्मण-वैश्य-शूद्र-राजा-रंक-दृष्ट-अदृष्ट-ज्ञात-अज्ञात-श्रुत-अश्रुत-स्वजन-परजन-मित्र-शत्रु-प्रत्यक्ष-परोक्षादिभेदाद् अनेकविधाः, तेषां युगलिकानां ३ पल्योपमानि उत्कृष्टमायुः, ३ क्रोशदेहमानम्, इतरेषां तु पूर्वकोटिरुत्कृष्टमायुः, ५०० धनुष्यदेहमानम्, चतुर्दश लक्षयोनयः, एतज्जीवानां विराधना कृता भवति, इहभवे०मिथ्या दु०

॥ १३ ॥ तत्रापि विशेषतःमातापिता-भाई-बहिन-पुत्र-कलत्र-मित्र शत्रु-बहु-बेटी-सासू-ससूरा-जेठाणि-देराणी-काका-काकी-मासा-मासी-भूआ-भूडा-साला-साली-पोतरा-पोतरी-दोहितरा-दोहितरी-दायाद-गोति-वेवाइ-गाही-आडोसी-पाडोसीप्रमुखजनैः समं कलह-कंदलादिना कृता भवति, इह भवे परभवे तन्मिथ्या दुष्कृतं देहि ॥ १४ ॥ अथ दुष्कृतगर्हा-तत्र पूर्वमाशातना अर्हच्चैत्ये मूलगर्भागारे महत्यो दश आशातनाः कृताः, एवं सिद्ध-प्रवचनाचार्यो-पाध्याय-वाचनाचार्य-रत्नाधिक-स्थविर-साधु-साध्वी-श्रावक-श्राविकासमस्त-संघस्य अभक्तिः-आशातना कृता, तन्मिथ्या० देहि । १ । कुतीर्थं कदापि प्रवर्तितं भवति । २ । कुदेव—कुगुरुसेवाकृता भवति ।३। श्रीवीतरागदेवमार्गः कदापि अपलापितो भवति । ४ । ज्ञानगुरुरपलपितो भवति । ५ । स्थापना, प्रतिलेखना विस्मृता भवति ।६। गंठसी-मुठसी-नवकारसी प्रमुखप्रत्याख्यानं भग्नं भवति । ७ । रात्रिभोजनं कृतं भवति । ८ । उत्सूत्रं प्ररूपितं भवति । ९ । छन्दो-ऽलंकार-ज्योतिष्क-वैद्यक-नाटक-कामशास्त्रप्रमुखाणि कुशास्त्राणि शिक्षितानि भवन्ति । १० । श्रीजिनभवनं पातितं भवति । ११ । श्रीजिनबिम्बानि भग्नानि भवन्ति । १२ । जिनप्रतिमा उत्थापिता भवति । १३ । देवसंबन्धीनि लोटि-लोटा-कलश-पिं-गाणी-ओरसीयो-सूखड-कुंडी-धोतीयाप्रमुखाणि उपकरणानि स्वगृहे व्यापृतानि भवन्ति । १४ । देवगुरुद्रव्यं भक्षितं भवति । १५। गुरुपुस्तकं विक्रीय भक्षितं भवति । १६ । पापकुटुम्बं पोषितं भवति । १७ । आकाशे प्रावरणं विना प्रतिक्रमणं कृतं भवति ।१८। अरघट्ट-क्षेत्र-यन्त्र-कूपाद्यारम्भाः कृता भवन्ति । १९ । इष्टवियोगे रोदनं कृतं भवति । २० । पाशदानेन कस्यापि गलकर्तनं कृतं भवति ।२१। तन्मिथ्यादुष्कृतं देहि ॥ पुनः अनन्तभवकृतपापगर्हा, तथाहि-खाटकीभवे गो-माहिष-च्छागादयो मारिता भवन्ति ।१।

चटिकामारभवे चटिकादयो मारिता । २ । धीवरभवे मत्स्यादयो मारिताः । ३ । आखेटकभवे मृगादयो मारिताः । ४ । कुम्भकारभवे भाण्डनिवाहा इष्टिकानिवाहा वा पाचिता । ५ । तैलिकभवे सजीवतिलसर्षपादय· पीडिता· । ६ । सूत्रधारभवे वृक्षाः छिन्ना भवन्ति । ७ । मालिकभवे नानाविधवनस्पतयो रोपिता·, छिन्नाः, विक्रीताः । ८ । भ्राष्टिकभवे गोधूम–मुद्गादयो भ्रष्टाः । ९ । लोहकारभवेऽग्न्यारम्भ· कृतो भवति । १० । कृषिवलभवे क्षेत्रे हलं क्षेटितं निदानं कृतं धान्यं लूनं वा भवति । १२ । भारवाहकभवे कर-वृषभ-खगर्दभानामुपरि प्रभूतो भार आरोपितो भवति । १४ । पृष्टिगालन-कीटपातन-व्यथोत्पादनात् कुमारणेन मारिता भवन्ति । १२ । भिल्लादिभवे मार्गो लुण्टितो भवति । १३ । कोलिकभवे वने दावानलो दत्तो भवति । १४ । कोट्टपालभवे च्छेदनभेदनताडनादिना मनुष्याः कदर्थिता भवन्ति । १५ । काजी-मुल्लाभवे चटकादीनां वधः कृतो भवति । १६ । अनार्यभवे बब्बरकूले मनुष्यशरीररुधिरेण पट्टकूलवस्त्राणि रञ्जितानि भवन्ति । १७ । सिंह–व्याघ्र–चित्रकादिभवे मृगादयो मारिता भवन्ति । १८ । सर्प-वृश्चिकादिभवे दंशनविषव्यापादनेन मनुष्यादयः पीडिताः, मारिता वा भवन्ति । १९ । मार्जारीभवे मूषकादयो भक्षिता भवन्ति । २० । गृहकोकिलाभवे मक्षिका भक्षिता भवन्ति । २१ । बकभवे मत्स्या गृहीता भवन्ति । २२ । शकुनिभवे तिड-चटकादयो गृहीता भवन्ति । २३ । पुनरपि इह परभवे वा विषं कस्यापि दत्तं भवति । २४ । सपत्नी–तत्पुत्राणामुपरि द्रोहश्चिन्तितो भवति । २५ । स्वकीय-परकीयगर्भो गालितः, पातितो वा भवति । २६ । जीवपानीयं ढोलितं भवति । २७ । शीलव्रतं गृहीत्वा भग्नं भवति । २८ । इहभवे, परभवे, श्रावकाणां यतीनां वा व्रतानि गृहीत्वा भग्नानि भवन्ति । २९ । साधु-साध्वीनां, साधर्मिकाणां, वा निन्दा कृता भवति । ३० । अन्यदपि सूतिका-दूतिका

-दलन-रन्धन-लिम्पनादिना यत्पापं कृतं भवति, इहभवे परभवे वा तन्मिथ्यादुष्कृतं देहि ॥४॥ अथ सुकृतानुमोदना—
जणभवण १ बिम्ब २ पुत्थय ३, संघ ७ सरूवाइं सत्तखेत्ताइं । जिण्णुद्धारो ८ पोसह–साला ९ साहारणं १० चेव॥१॥
इहभवे, परभवे श्रीवीतरागचैत्यं कारितं भवति।१। तेषां बिम्बानि रत्नप्रवालमयानि पाषाणमयानि निर्मापितानि भवन्ति।२। सूत्रसिद्धान्तपुस्तकानि वा लेखयित्वा साधुभ्यो वाचनार्थं प्रदत्तानि भवन्ति।३।साधुसाध्वीभ्यः शुद्धानि एषणीयानि अशन-पान-खादिम-स्वादिम-वस्त्र-पात्र-पीठ-फलक-औषध-भेषजादीनि भक्त्या प्रतिलाभितानि भवन्ति।६। साधर्मिकाणां भोजनेन वस्त्रपरिधापनेन वा भक्तिः युक्तिकृता भवति।७।जीर्णोद्धारो वा कृतो भवति।८। पौषधशाला वा कारिता भवन्ति।९।साधारणद्रव्यं वा दत्तं भवति।१०।आचार्योपाध्यायवाचकादिपदप्रतिष्ठामहोत्सवः कारितो भवति।११। श्रीशत्रुञ्जय-गिरिनार-आबू-अष्टापद-सम्मेतशिखर-राणकपुर-जेसलमेर-स्थंभणपार्श्वनाथ-गोडिसंखेश्वरपार्श्वनाथ-सोरीपुर-हाथिणापुर-फलवर्धिप्रमुखतीर्थयात्रा कृता भवन्ति,तत्पुण्यमनुमोदय।१२।पुनः पूर्वभवे पृथिवीकायो भूत्वा वीतरागप्रतिमात्वेन,अप्कायो भूत्वा तीर्थकराणां स्नानाभिषेकत्वेन,अग्निर्भूत्वा धूपोत्क्षेपत्वेन, वायुर्भूत्वा जिनानां साधूनां धर्मार्तानां शीतलत्वजनकत्वेन, वनस्पतिर्भूत्वा पुष्पादिनां पूजात्वेन, त्रसभवे शंखो भूत्वा जिनाग्रे मंगलध्वनित्वेन उपयोगत्वं प्राप्तो भवति तत्पुण्यमनुमोदय।१३।पुनः श्रीपर्युषणापर्वणि श्रीकल्पसूत्रपुस्तकं गृहीतं वाचितं वा भवति,।१४। श्रीपर्युषणादिपर्वणि पौषधिका भोजिता भवन्ति ।१५। साधर्मिकवात्सल्यं वा कृतं भवति।१६।सुपात्रे दानं दत्तं भवति ।१७। शीलव्रतं पालितं भवति ।१८। कल्याणक-एकादशी-पञ्चमी-पाक्षिक उपवासः, उपधान-समवसरण-प्रमुखं तपः कृतं भवति।१९। तेषां उद्यापनं

सावधानाः, सदा धर्मध्यानाः, कुक्षिसम्बला, ज्ञानदर्शनचारित्रनिर्मलाः साधवो मम गुरवः २. तथा उत्पन्नदिव्यविमलकेवलज्ञान-श्रीवीतरागदेवभाषितो हिंसाप्रतिकूलः, षड्जीवदयामूलो, मुक्तिपुरपाथेयसमान आज्ञाप्रधानो धर्मो मम धर्मः ३. इति देवगुरुधर्म-तत्त्वत्रयश्रद्धानरूपं सम्यक्त्वं हृदये विशेषतो दृढीकार्यम् । १ । अथ १८ पापस्थानानि–

आसव ५ कसाय ९ बन्धण ११, कलह १२ अभक्खाण १३ रइअरइ पेसुन्नं, परपरिवाए १४, अरईरइ १५ पेसुन्नं, १६ मायामोसं च १७ मिच्छत्तं १८॥१॥

तत्र प्रथमाश्रवे पृथिवी-अप्-तेजो-वायु-वनस्पति-द्वीन्द्रिय-त्रीन्द्रिय-चतुरिन्द्रिय-पञ्चेन्द्रियजीवा अभिघातादि १० प्रकारैः इह भवे, अनन्तेषु वा भवेषु, मनसा वचसा कायेन वा, जानता अजानता जीवा विराधिताः स्युस्तेषामरिहन्त-सिद्ध-साधु-देवा-ऽऽत्म-गुरुसाक्षिकं त्रिकरणशुद्ध्या हे पुण्यात्मन ! मिथ्यादुष्कृतं देहि तदा श्रोता वक्ति मिच्छामि दुक्कडं एवं सर्वत्रापि ज्ञेयं ॥ १॥ अथ द्वितीयाश्रवे हास्येन वा क्रोधेन वा मानेन वा मायया वा लोभेन वा मृषावाद उक्तो भवति, कन्यालिकादि ५ महत्कूटानि कथितानि स्युः तेषां इह भवे इत्यादि० मिथ्यादुष्कृतं देहि ॥ २ ॥ अथ तृतीयाश्रवे परद्रव्यापहारेण वा चौरिकया वा चौरानीतवस्तुग्रहणेन वा रसमिश्रभेदेन वा कूटतुल-कूटमानेन वा अदत्तादानं गृहीतं भवेद् इह भवे० मिथ्या० ॥ ३ ॥ अथ चतुर्थाश्रवे देव-मनुष्य-तिर्यक्संबन्धिमैथुनं सेवितं भवति स्व-परस्त्री-पुरुषगमनेनातिविषयलोलुपतया यदब्रह्म सेवितं भवति, इह भवे० मिथ्या दु०॥४॥ अथ पञ्चमाश्रवे धन-धान्य-क्षेत्र-वास्तु-सुवर्ण-रौप्य-द्विपद-चतुष्पदानामपरिमितसंग्रहेण क्षेत्र-कूपि-वाणिज्य-वाटिका-नदी-कूप-महारंभमूर्च्छादिकरणेन च परिग्रहः कृतो भवति, इह भवे अनन्तेषु भवेषु मनसा वचसा कायेन वा जानता अजानता जीवा विराधिताः स्युः तेषां मिथ्यादुष्कृतं देहि ॥ ५ ॥ तथा

क्रो॰ याळोभाः कषायाः कृता भवन्ति तेषां इह भवे॰ मि॰ इत्यादि॥९॥ तथा रागस्त्रिधा–स्त्रीपुरुषजनोपरि विषयलोलुपता कामरागः १धन-धान्य-स्वजन-पुत्र-माता-पितृप्रमुखजनोपरि रागः स्नेहरागः२,निजनिजमतोपरि अभिनिवेशेन कदाग्रहो दृष्टिरागः३॥ १०॥ एवं द्वेषोऽपि ॥ ११ ॥ लोकैः सह कलहकरणम् ॥१२॥ कर्कशवचनादिना कलङ्कदानम् ॥१३॥ सदसद्दूषणप्रकाशनेन परेषां निन्दाकरणम्॥१४॥ दुःखप्राप्तौ आकुलव्याकुलता अरतिः, सुखप्राप्तौ हर्षातिरेककरणं रतिः ॥१५॥ राजसमक्षम्, रहसि मर्मोद्घाटनादिना दण्डमुण्डादिकारापणम्॥१६॥न्यासापहारकरणं मायायुक्तमृषावादो वा॥१७॥ममाई,चामुण्डा,चउसट्टीयोगीनि,यक्ष,घोंघा-क्षेत्रपाल-विनायक-हरि-हरादीनां रागद्वेषकलुषचित्तानां देवतत्त्वबुद्ध्या माननम्, जोगि-संन्यासि-कडि-कापडि-तापस-शिख-मुल्लां-चारित्रभ्रष्टस्वलिङ्गिपासत्थ ओसन्न-निन्हवादीनां कुगुरूणां गुरुतत्त्वमाननम्,मिथ्यात्विप्ररूपिताहिंसादोषदुष्टकुधर्मस्य धर्मबुद्ध्या माननं मिथ्यात्वम् ॥ एवं १८ पापस्थानानि सेवितानि भवन्ति इह भवे॰ मिथ्यादु॰ ॥ २ ॥

अथ ८४ लक्षजीवायोनिक्षामणं तत्र प्रथमं पृथिवीकायः–स्फटिक–मणि-रत्न-प्रवाल-हिंगूल-हरियाल-मणिसिल-सुरमो-सोनुं-रूपुं-गेरू-खाडि, वानि-अरणेट्ट-पलेव-भोडल-वस्त्र-रंगणी-कालिमांटी–उपरमांटी–पाषाण-खरपृथिवीप्रमुखा अनेकभेदाः. अस्याः द्वाविंशति २२ सहस्रवर्षाणि पृथिव्यादेरुत्कृष्टमायुः, अङ्गुलासंख्येयभागो देहमानम्, आमलकप्रमाणखण्डे ये जीवाः सन्ति तेषां यदि पारावतप्रमाणा देहाः स्युस्तदा जम्बूद्वीपे न मान्ति, अस्याश्च ७ लक्षयोनयः, एतज्जीवानामारम्भादिना विराधना कृता भवति, इह भवे पूर्ववद् मिथ्यादुष्कृतं देहि ॥ १ ॥

अथ अप्कायः–तत्र आकाशपाणी–भूमिपाणी-ओस-हिम-करहा-त्रेह-धुंहरि- घनोदधिप्रमुखा अनेके भेदाः, अस्य ७ सहस्रवर्षाणि

उत्कृष्टमायुः, अङ्गुलासंख्येयभागं देहमानम्, एकस्मिन् जलबिन्दौ असंख्याता जीवाः, ७ लक्षयोनयः, एतज्जीवानामारम्भादिना विराधना कृता भवति, इह भवे पूर्ववद् मिथ्यादुष्कृतं देहि ॥ २ ॥ अथ तेजस्कायः—तत्र अग्नि-अंगार-मुम्मुर-झाल-विजलीप्रमुखा अनेके भेदाः, तस्य ३ अहोरात्राणि उत्कृष्टमायुः, अङ्गुलासंख्येयभागो देहमानम्, गुञ्जाप्रमाणेऽग्नौ असंख्याता जीवाः, ७ लक्षयोनयः, एतज्जीवानामुज्वालन—प्रज्वालन-निर्वापणाद्यारम्भेण विराधना कृता भवति, इहभवे० पूर्ववत् मिथ्या० ॥ ३ ॥ अथ वायुकायः—तत्र गुञ्जावात-शुद्धवात-महावात-भूतेलीय-वांतोलिय-कोरण-घनवात-तनुवातप्रमुखा अनेके भेदाः, अस्य ३ सहस्रवर्षाणि उत्कृष्टमायुः, अंगुलासंख्येयभागो देहमानम्, अङ्गुलप्रमाणाकाशवर्तिवायुकाये असंख्याता जीवाः, तस्य ७ लक्षयोनयः, एतज्जीवानामारम्भादिना विराधना कृता भवति, इह भवे पूर्ववद् मिथ्या० ॥४॥ अथ वनस्पतिकायः—प्रत्येक-साधारण-भेदेन द्विधा, तत्र प्रत्येकवनस्पतिः—अम्ब-निम्ब-कदम्बा-ऽशोक-नाग-पुन्नाग-धव-खादिर- वड-पिप्पल-कइर-बोर-खेजडा-जालि-आक-धतूर-गयण-केलि-खड-तृणहरि-वेलिलता-पत्र-फूल-बीज-छलिप्रमुखा अनेके भेदाः, तस्य साधिकसहस्रयोजनं देहमानं पद्मद्रहादौ कमलादीनाम्, १० सहस्रवर्षाणि उत्कृष्टमायुः, १० लक्षयोनयः एतेषां विराधना कृता भवति, इह भवे इत्यादि पूर्ववत् मि० ॥ ५॥ अथ साधारणवनस्पतिः, कन्द—मूल-अङ्कुर-किसलय-सेवाल-भुफोड—पञ्चवर्णफूलणि-गाजर-मूला-सूरण-लसण-प्याज—आदु-थोहरि-कुंआरि गुग्गुलि-गिलोइ-मोथ-नीलिहलदर-रताल-पिण्डालूप्रमुखा अनेके भेदाः, जघन्य—मुत्कृष्टं चान्तर्मुहूर्तमायुः, अङ्गुलासंख्येयभागो देहमानम्, एकस्मिन् सूच्यग्रभागप्रमितेऽनन्तकायेऽनन्ताजीवाः, १४ लक्षयोनयः, एतज्जीवानां छेदनाद्यारम्भेण

विराधना कृता भवति, इह भवे पूर्ववद् मिथ्यादु०॥६॥ अथ—द्वीन्द्रियाः—तत्र शंख-सीप-कउडा-कातरा-पुरा-अलसीया-कृमि-गंडोला-गाडर-चूडेलि-मेहरि-तंबोलिया-वालाप्रमुखा अनेके भेदास्तेषाम्, १२ वर्षाणि उत्कृष्टमायुः, १२योजनानि अलशीयादीनां द्वीन्द्रियाणां उत्कृष्टं देहमानम्, २ लक्षयोनयः, एतज्जीवानां विराधना कृता भवति, इह भवे० मिथ्यादु० देहि ७॥ अथ त्रीन्द्रियाः-तत्र कीडी-मंकोडी-गद्द-हिया-जूं-लिख-मांकड-कुंथुआ-उदेही-धण-ईली-धानकीडा-जउया-गोगीडा—घींवेली-मांमोला प्रमुखा अनेके भेदाः, तेषां ४९ दिनानि उत्कृष्टमायुः, क्रोशत्रयं च उत्कृष्टं त्रीन्द्रियाणां कर्णशृङ्गालादीनां देहमानम्, २ लक्षयोनयः, एतज्जीवानां विराधना कृता भवति, इह भवे० मिथ्यादुष्कृतं देहि॥८॥ अथ चतुरिन्द्रियाः—तेषां माखी- वींछी-कुती-भमरा- पतंगिया-तीड-मच्छर-डांस-मसा-भमरी—भणहणा-कंसारि-कोलियावडाप्रमुखा अनेके भेदाः, तेषां षण्मासा उत्कृष्टमायुः, एकयोजनप्रमाणं च भ्रमरादीनां उत्कृष्टं चतुरिन्द्रियाणां देहमानम्, २ लक्षयोनयः, एतज्जीवानां विराधना कृता भवति इह भवे० मिथ्या० ॥९॥ अथ पञ्चेन्द्रियाः-ते च—नारक-देवता-तिर्यग्मनुष्यभेदाच्चतुर्विधाः, तत्र रत्नप्रभादि ७ पृथिवी गता नारका असंख्याताः, तेषां ३३ सागरोपमाणि उत्कृष्टमायुः, ५०० धनूंषि उत्कृष्टं देहमानम्, ४लक्षयोनयः, एतेषांस्वयम्, परमाधार्मिकैर्भूय वा च्छेदन-क्रकच-विदारण-त्रपुपान-कुम्भीपाकपाचनादिनानाविधकदर्थनया विराधना कृता भवति, इहभवे० मिथ्यादु०॥१०॥अथ देवाः—तेषां भवनपति१व्यन्तर२ज्योतिष्क३वैमानिक४भेदेन चतुर्भेदाः, ३३ सागरोपमाणि उत्कृष्टमायुः, उत्कृष्टं सप्तहस्तदेहमानम्, ४लक्षयोनयः, तेषां दिव्यसुखभोगं दृष्ट्वा ईर्ष्याकरणेन, मन्त्र-यन्त्र-तन्त्र-आकर्पणादिना दुःखदानेन अपलापेन वा विराधना कृता भवति, इहभवे० मिथ्यादु०॥११॥अथ तिर्यञ्चः—तेषां जलचर१स्थलचर२खेचर ३ उरः

वा कृतं भवति ।२०। साधर्मिकगृहे सुकृतं कृतं भवति ।२१। धर्मध्यानं वा कृतं भवति ।२२। अन्यदपि यत्पुण्यं कृतं भवति ।२३। इहभवे परभवे वा तत्सर्वमनुमोदय । पुनरपि सांप्रतं निजवित्तानुसारिसप्तक्षेत्र्यां वित्तं व्ययीकुरु, आरम्भादिनियमं पक्षं मासं यावज्जीवं वा कुरु, इत्यादि ॥

सर्वमंगलमांगल्यं, सर्वकल्याणकारणम् । प्रधानं सर्वधर्माणां, जैनं जयति शासनम् ॥ १ ॥
आराधनां सुगमसंस्कृत-वार्तिकाभ्यां, चक्रे क्रमात् समयसुन्दर आदरेण ।
उच्चाभिधाननगरे महिमासमुद्र–शिष्याग्रहेण मुनिपट्टरसचन्द्रवर्षे ॥२॥ (१६६७)

इति श्रावकाराधना समाप्ता ॥

इति श्रीसौभाग्यपञ्चम्यादिपर्वकथासंग्रहः साधु–श्रावकाराधनायुक्तः समाप्तः ॥

॥ इति श्रीसौभाग्यपञ्चम्यादिपर्वकथासंग्रहः साधु-श्रावकाराधनायुक्तः समाप्तः ॥